शेषा जिनशिष्या ऋषयस्तद्वंशप्रतिपादकत्वादृषिवंश इति च तत्प्रतिपादनं चात्र पर्युषणाकल्पस्य ऋषिवंशपर्यवसानस्य समवसरणप्रक्रमेण भणितत्वादत एव यतिवंशो मुनिवंशश्चैतदुच्यते, यतिमुनिशब्दयोः ऋषिपर्यायत्वात्, तथा श्रुतमिति चैतदाख्यायते, परोक्षतया त्रैकालिकार्थावबोधनसहत्वादस्य, तथा 'श्रुताङ्गमिति वा' श्रुतस्य–प्रवचनस्य पुरुषरूपस्याङ्गं–अवयव इतिकृत्वा, तथा 'श्रुतसमास इति वा, समस्तसूत्रार्थानामिह संक्षेपेणाभिधानात् 'श्रुतस्कन्ध इति वा,' श्रुतसमुदायरुपत्वादस्य 'समाए व' त्ति समवाय इति वा समस्तानां जीवानां–जीवादिपदार्थानामभिधेयतयेह समवायनात् मीलनादित्यर्थः, तथा एकादिसंख्याप्रधानतया पदार्थप्रतिपादनपरत्वादस्य संख्येति व्याख्यायते, तथा समस्तं–परिपूर्णं तदेतदङ्गमाख्यातं–भगवता, नेह श्रुतस्कन्धद्वयादिखण्डनेनाचारादिवदङ्गतेति भावः, तथा 'अज्झयणंति' त्ति समस्तमेतदध्ययनमित्याख्यातं नेहोद्देशकादिखण्डनाऽस्ति शस्त्रपरिज्ञादिष्विवेति भावः, इतिशब्दः समाप्तौ 'ब्रवीमी' ति किल सुधर्म्मस्वामी जम्बूस्वामिनं प्रत्याह स, ब्रवीमि–प्रतिपादयामि, एतत् श्रीमन्महावीरवर्द्धमानस्वामिनः समीपे यदवधारितमित्यनेन गुरुपारम्पर्यमर्थस्य प्रतिपादितं भवति, एवं च शिष्यस्य ग्रन्थे गौरवबुद्धिरुपजनिता भवति, आत्मनश्च गुरुषु बहुमानो दर्शित औद्धत्यं च परिहृतं, अयमेवार्थः शिष्यस्य सम्पादितो भवति मुमुक्षूणां चायं मार्ग इत्यावेदितमिति समवायाख्यं चतुर्थमङ्गं वृत्तितः समाप्तम् ॥

नमः श्रीवीराय प्रवरवरपार्श्वाय च नमो, नमः श्री वाग्देव्यै वरकविसभाया अपि नमः ॥
नमः श्रीसङ्घाय स्फुटगुणगुरुभ्योऽपि च नमो, नमः सर्वस्मै च प्रकृतविधिसाहाय्यककृते ॥ १ ॥

यस्य ग्रन्थवरस्य वाक्यजलधेर्लक्षं सहस्राणि च, चत्वारिंशदहो चतुर्भिरधिका मानं पदानामभूत् ॥
तस्योच्चैश्चुलकाकृतिं निदधतः कालादिदोषात्तथा, दुर्लेखात् खिलतां गतस्य कुधियः कुर्वन्तु किं मादृशा· ? ॥२॥

स्वं कष्टेऽतिनिधाय कष्टमधिकं मा मेऽन्यदा जायतां, व्याख्यानेऽस्य तथा विवेक्तुमनसामल्पश्रुतानाममुम्
इत्यालोचयता तथापि किमपि प्रोक्तं मया तत्र च, दुर्व्याख्यानविशोधनं विदधतु प्राज्ञाः परार्थोद्यताः ॥ ३ ॥
इह वचसि विरोधो नास्ति सर्वज्ञवाक्यात्, क्वचन तदवभासो यः स मान्द्यान्नृबुद्धेः ।
वरगुरुविरहाद्वाऽतीतकाले मुनीशैर्गणधरवचनानां श्रस्तसङ्घातनाद्वा ॥ ४ ॥
व्याख्यानं यद्यपीदं प्रवरकविवचःपारतंत्र्येण दृष्टं (ब्धं) सम्भाव्योऽस्मिंस्तथापि क्वचिदपि मनसो मोहतोऽर्थादिभेदः ।
किन्तु श्रीसङ्घबुद्धेरनुशरणविधेर्भावशुद्धेश्च दोषो, मा मेऽभूदल्पकोऽपि प्रशमपरमना अस्तु देवी श्रुतस्य ॥ ५ ॥
निःसम्बन्धविहारहारिचरितान् श्री वर्द्धमानाभिधान्, सूरीन् ध्यातवतोऽतितीव्रतपसो ग्रन्थप्रणीतिप्रभोः ॥
श्रीमत्सूरिजिनेश्वरस्य जयिनो दर्प्पीयसां वाग्मिनां, तद्बन्धोरपि बुद्धिसागर इति ख्यातस्य सूरेर्भुवि ॥ ६ ॥
शिष्येणाभयदेवाख्यसूरिणा विवृतिः कृता ॥ श्रीमतः समवायाख्यतुर्याङ्गस्य समासतः ॥ ७ ॥
एकादशसु शतेष्वथ विंशत्यधिकेषु विक्रमसमानाम् । अणहिलपाटकनगरे रचिता समवायटीकेयम् ॥ ८ ॥
प्रत्यक्षरं निरूप्यास्याः, ग्रन्थमानं विनिश्चितम् । त्रीणि श्लोकसहस्राणि, पादन्यूना च षट्शती ॥ ९ ॥
सूत्रसंख्या श्लोक १६६७ वृत्तिः ३५७५ उभयोर्मीलनेन ५२४२ ॥

इति चन्द्रकुलाम्बरनभोमणिश्रीमदभयदेवाचार्यदृब्धा समवायाङ्गसूत्रवृत्तिः समाप्ता ॥